दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।
कामिनां लयवैषम्यं गेयं रागमवर्धयत् ॥ १८२ ॥
ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ १८३ ॥
प्रमेयोऽप्यप्रमेयोऽसि सफलोऽप्यसि निष्फलः ।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्तये ॥ १८४ ॥

कलाविरोधस्य गुणत्वमुदाहरति—**दोलेति** । दोलायाः प्रेङ्खायाः अभिप्रेरणं इतस्ततः संचरणं तेन त्रस्तो यो वधूजनः तस्य मुखादुद्गतं तेनोद्गीतम् । यत् गेयं दोलागीतम् । तत् लयस्य गीतादिसाम्यस्य । वैषम्यं भिन्नकालत्वेन विषमता यत्र एतादृशमपि । कामिनां तत्र संगतानां विलासिनाम् । रागं अनुरागम् । अवर्धयत् । क्रमप्राप्तमेव गानं रसिकानां रागवर्धकं भवतीति संगीतशास्त्रस्थितिः । प्रकृते तु तद्विरुद्धमिति कलाविरोधः । स च विलासिनीषु कामिनां सविशेषरागानुसूचकत्वाद्गुण एव ॥ १८२ ॥

लोकविरोधस्य गुणत्वं दर्शयति—**ऐन्दवादिति** । अयं अबलायाः विरहस्य क्लेशेन विह्वलः व्याकुलः । कामी मदनातुरः । ऐन्दवात् इन्दुसंबन्धिनः । अर्चिषः मयूखात् । हव्यवाहनं कृशानुम् । शिशिरं शीतलम् । गणयति मन्यते । अत्र ऐन्दवादर्चिषः हव्यवाहनः शिशिर इति लोकविरोधः । विरहिण्यां चन्द्रकिरणस्य उद्दीपकत्वेन संतापकत्वात् तादृशवर्णनं गुण एव इति लोकविरोधस्यात्र गुणत्वम् ।१८३।

न्यायविरोधस्य गुणत्वं दर्शयति—**प्रमेय इति** । प्रमेयः श्रुतिप्रमाणवेद्यः । अप्रमेयः अनन्तगुणशक्तित्वादपरिच्छेद्यस्वरूपः । सफलः व्यष्टिरूपेण सांशः । निष्फलः समष्टिरूपेण निरंशः । एकः अद्वितीयः । अनेकः इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतिभिः प्रपञ्चात्मकेन विश्वरूपः इत्यर्थः । एतादृशे विश्वमूर्तये सर्वव्यापकत्वेन विश्वाकाराय । ते तुभ्यम् । नमः । अत्र विरुद्धधर्माणां प्रतिपाद्यमानं सामानाधिकरण्यं न कुत्रापि दर्शने दृष्टम् इति न्यायविरोधः । स च परमेश्वरस्य लोकातीतमाहात्म्यमुद्भावयतीति प्रकृते गुणः ॥ १८४ ॥

१ दोलाभिप्रेरणत्रस्त°- अ. २ °वैषम्यादेयम्- अ, क. ३ °न्यलय- अ, क. ४ सकलोऽप्यसि निष्कलः- अ, क.

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालपुत्रिका[1] ।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥ १८५ ॥
[2]शब्दार्थालंक्रियाश्चित्रमार्गाः सुकरदुष्कराः ।
गुणा दोषाश्च काव्यानामिह[3] संक्षिप्य दर्शिताः ॥ १८६ ॥
व्युत्पन्नबुद्धिरमुना विधिदर्शितेन ।
मार्गेण दोषगुणयोर्वशवर्तिनीभिः ॥

आगमविरोधस्य गुणत्वं दर्शयति—पञ्चानामिति । पञ्चानां पाण्डु-
पुत्राणां पाञ्चालपुत्रिका द्रौपदी । पत्नी अभूत् । पुनश्च सतीनां साध्वीनाम् । अग्रणीः
१श्रेष्ठा । आसीत् । दैवः देवतासंबन्धी । विधिः व्यवहारः । ईदृशः स्वतन्त्रः नागम-
परतन्त्र इति भावः । अत्र युधिष्ठिरादीनां धर्माद्यंशतया द्रौपद्याश्च पृथिव्यधिष्ठातृ-
रूपतया देवत्वान्नागमापरतन्त्रता इति भावः । अत्र—यथैकस्मै यूपाय बह्व्यो
२रशना नैकस्यै रशनायै बहवो यूपास्तथैकस्मै पत्ये बह्व्यो जाया नैकस्यै जायायै
बहवः सहपतयः—इति श्रुत्या एकस्या बहुपतित्वनिषेधादागमविरोधः । स च
द्रौपद्या देवतात्वेन आगमानपेक्षतां व्यञ्जयन् तस्या माहात्म्यमुद्भावयति इति
१गुणः ॥ १८५ ॥

एतावत्पर्यन्तं निरूपितान् पदार्थान् संकीर्त्य ग्रन्थमिममुपसंहरति—
शब्दार्थेति । काव्यानां शब्दार्थालंक्रियाः शब्दालंकाराः दीपकावृत्तिक्रम-
१श्लेषाः चत्वारः अर्थालंकाराश्च स्वभावाख्यानादयः । तथा सुकराः दुष्कराः चित्र-
मार्गाः । तत्र केचित् सुकराः पादादियमकादयः । केचित् दुष्कराश्च महायमक-
स्वरस्थानवर्णनियमादयः । तथा गुणाः श्लेषप्रसादादयः । दोषाः अपार्थव्यर्थादयः ।
२चकारेण काव्यलक्षणं सन्देहो च वैदर्भगौडरूपौ । एते संक्षिप्य दर्शिताः विस्ता-
रभिया संक्षेपेणैवोक्ताः । अत्र यावन्तः पदार्था निरूपिताः तेषां परिगणनं कृतं
न । तत पूर्वक्रमानुरोधेनेति ज्ञेयम् ॥ १८६ ॥

अन्ते फलसंकीर्तनपूर्वं ग्रन्थमुपसंहरति—व्युत्पन्नेति । अमुना पूर्वोक्ते-
नानेन । विधिदर्शितेन विधिः भरतादिमुनीनामादेशः तदनुरोधेन दर्शितेन निरू-

१ °कन्यका. अ. कपा. २ शब्दार्थानां क्रियामार्गाः सुकराश्च दुष्कराः अ.
३ काव्यानामिति. अ, क.

वाग्भिः कृताभिसरणो मदिरेक्षणाभि-
र्धन्यो युवेव रमते लभते च कीर्तिम् ॥ १८७ ॥

॥ इत्याचार्यदण्डिनः कृतौ काव्यादर्शे शब्दालंकार-दोष-
विभागो नाम तृतीयः परिच्छेदः ॥

१पितेन । एतेन स्वनिरूपितेन । दोषगुणयोः हेयोपादेयधर्मयोः । मार्गेण व्यवस्थिति-प्रकारेण विवेचनपद्धत्या वा । व्युत्पन्नबुद्धिः साहित्यशास्त्रे संस्कृतबुद्धिः । काव्यतत्त्वविदिति भावः । अत एव वशवर्तिनीभिः तदधीनाभिः वाग्भिः । कृताभिसरणः ६स्वयंकृताभिगमनः । अत एव धन्यः मदिरेक्षणाभिः कृताभिसरणः युवा यथा तथा रमते तद्विलासे रमते । कीर्तिं च लभते जगति विश्रुतकीर्तिश्च भवति॥१८७॥

विचिन्त्य साहित्यविदां निबन्धान्
विलोक्य तत्तत्सुकविप्रबन्धान् ।
आचार्यदण्डिप्रथितस्य काव्या-
दर्शस्य वृत्तिर्विहिता प्रभाख्या ॥ १ ॥

गृह्णन्ति मोदाद्गुणलेशबिन्दून्
नयन्ति शोषं परदोषसिन्धून् ।
पश्यन्तु ते मत्कृतिमादरेण
धन्या जनिस्तेन न चापरेण ॥ २ ॥

विद्वत्सदर्थं कृतिर्मयैषा
तथोपहासाय न वा परेषाम् ।
साहित्यशास्त्रेषु दृढानुरागात्
चापल्यमेतद्विदुषां पुरस्तात् ॥ ३ ॥

---

१ स्तानु. क. २ इत्यार्य°. अ. ३ गुणदोषविभा°. अ. ४ चतुर्थः. अ, क.
५ पुष्पिकायाः परतः अ पुस्तके अधिकम्—
॥ शब्दालंकारः समाप्तः । श्रीपार्वत्यै शिवाय नमः ॥

स्वर्गे सुधास्वादनलोलुपास्ते
सुराः प्रनृत्यन्तु सुराङ्गनाभिः ।
वयं तु काव्यामृतपानतृप्ता
विदग्धगोष्ठ्यां विहराम मोदात् ॥ ४ ॥

शब्दाम्भोनिधिमन्थने विमलधीर्येषां परो मन्दरो
ख्याता ये च विराजनाम्नि नगरे श्रीबालकृष्णाभिधाः ।
गौरीवद्बहुमङ्गला समभवल्लक्ष्मीश्च यद्गेहिनी
ताभ्यां लब्धजनिर्व्यधाच्छिशुहितां वृत्तिं च रङ्गाभिधः ॥ ५ ॥
श्रीमुकुन्दपदाम्भोजे द्वयमर्पितमस्तु मे ।
काव्यादर्शस्य टीकेयं प्रेमार्द्रं हृदयं तथा ॥ ६ ॥

इति श्रीवैराजक्षेत्रवासिभी रङ्गाकुलावतंसैर्बालकृष्णाचार्यतनुजै रङ्गाचार्यसूरिभिः विरचितायां काव्यादर्शव्याख्यायां प्रभाख्यायां तृतीयः परिच्छेदः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

ख



ग

### श

# अथ काव्यादर्शटीकास्थश्लोकप्रतीकसूचिः ।

य

# शुद्धिपत्रम्

| पत्रम् | श्लोकः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|
| २ | १ | २२ | तत्र हंसवधू |
| ४ | ४ | ७ | व्याप्तामिव |
| ५ | ५ | १७ | प्रकाशकृताः– |
| ५ | ५ | १९ | युजे ॥ १२ |
| ८ | १० | १३ | पदार्थाः तैर्यवच्छिन्ना |
| १५ | १३ | ० | सर्वबन्धांश |
| २३ | २० | २ | व्याप्तिवारणाय यथा |
| २३ | २० | ३ | परिहरणाय च |
| २६ | २३ | १८ | संस्कृतासंस्कृता |
| २७ | २६ | ० | चिह्नमाख्यायिकाया |
| ३१ | ३१ | ९ | आख्यायिकादावपि |
| ४५ | ४४ | ४५ | विशेषो |
| ५४ | ५० | २१ | वररामामुखानिलैः |
| ५४ | ५० | ३३ | वक्त्रापोनिन्य |
| ६७ | ६२ | १४ | स्वपिमि |
| ७७ | ६७ | ९ | इत्यर्थः |
| ८१ | ८० | ७४ | इत्यादिक रीत्रे |
| ९१ | ८५ | ३ | बालान्तानां कान्तं |
| ९४ | ८५ | ६५ | तटभूमिः |
| ९५ | ८७ | ८ | भुजद्वयस्य |
| ११७ | ९ | ७ | धर्मः |
| ११८ | १३ | ३ | श्लेषस्वभावोक्तिः |
| १२३ | १९ | १५ | यौतकत्वं स्वीक्रियते |
| १२७ | २२ | ७ | व्यञ्जनामप्य |
| १२७ | २४ | ३ | मुखस्यैव |
| १३४ | ३४ | ११ | प्रतिषेधोपमैव |
| १३५ | ३६ | २ | इत्येवं निषेध |
| १३७ | ४० | ३ | तानि इव |
| १५२ | ५७ | १३ | तस्यामुत्तं |
| १६२ | ७१ | ३ | यासां ताः |
| १७३ | ९६ | ३६ | स्कन्धादार |
| १७३ | ९६ | ३७ | तुम्बालता |
| १७५ | ९७ | १८ | उपकारः |